  - 340–346: Harsil
  - 347–348: Uttarakāśī
  - 349–350: Devaprayāga
  - 351–353: the sandy place between Devaprayāga and Rishikesh
  - 354–380: Rishikesh
  - 381–394: Haridvār
- 395–398: reference to Yamunā
- 399–400: Prayāg
- 403: Kāśī
- 404: reference to Calcutta
- 405–415: Gaṅgāsāgara
- 416–438: reflections
- 439–484: references to Kailāsa–Mānasarovar
- 487–547: concluding section—offering this *Himālaya Gadyam* at the Sacred Feet of the *Sadguru*

The book opens with invocatory *śloka*s – preceded by *Gāyatrī* – on Lord Gaṇeśa, Sarasvatī, Sadguru Śrī Tyāgabrahmam, and Mother Gaṅgā. Then there are invocatory verses on Raghunāthasvāmī at Devaprayāga, Lord Narasiṃha at Joshimaṭh, Badarī Nārāyaṇa and Śrī Kṛṣṇa. The text begins with the *dhyāna śloka* on the *Sadguru* and concludes with the *maṅgala śloka* on Him. It is followed by *Sadguru Maṅgalāṣṭakam*, eight *śloka*s of benediction on the *Sadguru*. They almost summarise the *Himālaya Gadyam* and the underlying *bhāva* in it.

***Oṃ̃***

Pushpa Srivatsan

ॐ

सद्गुरुश्रीत्यागब्रह्मार्पणम्

*To My Gurudeva,*
*Sadguru Śrī Tyāgabrahmam*

श्रीः

ॐ सद्गुरुश्रीत्यागराजस्वामिने नमो नमः

# श्रीगणेशपञ्चकम्

*विनायकाय विद्महे। विघ्नघ्नाय च धीमहि। तन्नो दन्तिः प्रचोदयात्॥*

विनायकैकदन्ताय व्यासभारतलेखिने ।
विद्यारम्भविनूताय विघ्नेश्वराय ते नमः ॥ १

गणेश्वराय गम्याय गानारम्भनुताय च ।
गंरूपाय गरिष्ठाय गौरीसुताय ते नमः ॥ २

अक्षरारम्भवन्द्याय आगाधज्ञानसिद्धये ।
इहलोकसुसन्नेत्रे ईशपुत्राय ते नमः ॥ ३

उत्तमश्लोकपूज्याय ऊर्ध्वदृष्टिप्रसादिने ।
एकचित्तप्रदात्रे च ऐक्यध्येयाय ते नमः ॥ ४

ओंकारवक्रतुण्डाय औपहारिकगीतये ।
पञ्चकश्लोकमालाय पुष्पार्चिताय ते नमः ॥ ५

ॐ

शुभमस्तु

श्रीः

ॐ सद्गुरुश्रीत्यागराजस्वमिने नमो नमः

# श्रीसरस्वतीस्तोत्रम्

*सरस्वत्यै च विद्महे। वागर्थायै च धीमहि। तन्नो वाणी प्रचोदयात्॥*

*ध्यानम् ।*
*नमस्तुभ्यं वरे देवि वीणापुस्तकधारिणि ।*
*विद्यासंपत्तिदे वाणि सरस्वति नमोस्तु ते ॥*

*ऐंबीजपूजिते देवि वीणासङ्गीतमोदिते।*
*ज्ञानमोक्षकविस्फूर्ते सरस्वति नमोस्तु ते ॥*

वाग्देवीं स्वरमाधुर्यां सङ्गीतकवितावराम् ।
वीणापुस्तकसंवासां वाणीं वन्दे सरस्वतीम्॥ १

वीणागानप्रवीणां च विद्याकूटविलासिनीम् ।
गानमाधुर्यवाचं च वाणीं वन्दे सरस्वतीम् ॥ २

वीणासयुक्तकण्ठां च वीणाभेदमृदुस्वराम् ।
वीणासुस्वरसानन्दां वाणीं वन्दे सरस्वतीम् ॥ ३

ज्ञानमोक्षप्रदात्रीं च ज्ञानिसज्जनवल्लभाम् ।
ज्ञानसद्गुरुरूपां च वाणीं वन्दे सरस्वतीम्॥ ४

वागर्थपुष्टिसंयुक्तां वाग्वर्णवर्णमालिकाम् ।
वाक्संपत्संप्रदात्रीं च वाणीं वन्दे सरस्वतीम् ॥ ५

गङ्गासारसुवाक्सारां वाक्शब्दलयवासिनीम् ।
श्लोकशैलीसुनृत्यां च वाणीं वन्दे सरस्वतीम् ॥ ६

रागतालगतिस्थाम्बां लयलास्यसुवाचिकाम् ।
कवितोल्लोललोलां च वाणीं वन्दे सरस्वतीम्॥ ७

शारदां स्वरसामोदां रागदां वरदां वराम् ।
वरसुस्वरविद्यां च वाणीं वन्दे सरस्वतीम्॥ ८

श्वेतपुष्पासनासन्नां श्वेतमुत्यस्मितानननाम् ।
श्वेतवस्त्रसुभूषां च वाणीं वन्दे सरस्वतीम् ॥ ९

हिमश्वेतालयां श्वेतां हिमशृङ्गविकासिनीम् ।
हिमश्वेतासरां गङ्गां वाणीं वन्दे सरस्वतीम् ॥ १०

संसारतापशाम्यां च संसारदुःखमोचनीम् ।
सङ्गीतसत्सुखावाहां स्तुत्यां वन्दे सरस्वतीम् ॥ ११

त्यागराजसुवाक्संस्थां शिष्यापुष्यानुतिस्थिराम् ।
सङ्गीतसुस्वरां वाणीं ब्राह्मीं वन्दे सरस्वतीम् ॥ १२

सरस्वत्यर्पणं स्तोत्रं सरस्वत्याः कृपोद्भवम् ।
सरस्वत्यर्चनं श्रेष्ठं सरस्वत्याः कृपावहम् ॥ १३

मङ्गलं मातृकायै च सरस्वत्यै सुमङ्गलम् ।
वाण्यै सङ्गीतवाण्यै च गीर्वाण्यै शुभमङ्गलम् ॥ १४

ॐ

शुभमस्तु

श्रीः

ॐ सद्गुरुश्रीत्यागराजस्वमिने नमो नमः

# सद्गुरुश्रीत्यागराजाष्टकम्

*त्यागराजाय विद्महे। नादहिम्याय धीमहि। तन्नस्सद्गुरुः प्रचोदयात्॥*

सद्गुरुत्यागराजाय हिमशैलस्मृताय च ।
शैलोत्तुङ्गसुगुण्याय महात्मने नमो नमः ॥ १

नामगङ्गासुधाराय ज्ञानहिम्याचलाय च ।
प्राणसंस्फूर्तिकाराय पावनाय नमो नमः ॥ २

हिमगद्यप्रचोदाय गङ्गास्तोत्रप्रभूतये ।
गद्यपद्यप्रमोदाय गुरुदेवाय ते नमः ॥ ३

ध्यानगङ्गानिमग्नाय गानगङ्गाप्रसारिणे ।
ज्ञानगङ्गाप्रभावाय नमो मत्प्राणशक्तये ॥ ४

नारायणाप्तकामाय नागशायिसुगायिने ।
नादमण्डलवृत्ताय नादसद्गुरवे नमः ॥ ५

सप्तस्वराधिवासाय सद्गङ्गासदनाय च ।
सीतारामाभिरामाय सद्गुरुस्वामिने नमः ॥ ६

सत्यवाक्सत्यरूपाय सत्त्वातीतैकशक्तये ।
सत्यश्रीरामनिष्ठाय त्यागराजाय ते नमः ॥ ७

नमो मद्गुरुदेवाय नमो मङ्गलमूर्तये ।
नमो नादावताराय पुष्पार्चिताय ते नमः ॥ ८

ॐ

शुभमस्तु

श्रीः

ॐ सद्गुरुश्रीत्यागराजस्वमिने नमो नमः

# हिमालयस्तुतिः

*मोक्षोपायाय विद्महे। माङ्गल्यायै च धीमहि। तन्नो गङ्गा प्रचोदयात्॥*

हिमालयप्रभावायै हिमनद्यै नमो नमः ।
हिमसंहतिभावायै हिमवत्यै नमो नमः ॥ १

अलकापुरिनन्दायै अतिभायै नमो नमः ।
भवापोहनपुण्यायै भागीरथ्यै नमो नमः ॥ २

सङ्गमक्षेत्रपावन्यै गङ्गामात्रे नमो नमः ।
देवप्रयागदिव्यायै देवनद्यै नमो नमः ॥ ३

देवदेवविनूतायै देवभूत्यै नमो नमः ।
देवाधिदेवपूज्यायै गङ्गादेव्यै नमो नमः ॥ ४

नमः श्रीरामभद्राय गङ्गातीरालयाय च ।
सर्वोत्कृष्टाय शान्ताय गभीराय नमो नमः ॥ ५

भागीरथ्यलकानन्दासङ्गमाभिमुखाय च ।
देवप्रयागदैवाय रघुनाथाय ते नमः ॥ ६

नमःसीतावराजाय रामचन्द्राय विष्णवे ।
सर्वशक्तिप्रदात्रे च सर्वोन्नताय ते नमः ॥ ७

रुद्रप्रयागनाथाय नारदागीतशम्भवे ।
मन्दाकिन्यलकानन्दासङ्गमस्थाय ते नमः ॥ ८

मन्दाकिन्यभिषिक्ताय केदारलिङ्गमूर्तये ।
स्वयंभूशैलरूपाय शिवाय ओं नमो नमः ॥ ९

श्रीयोगनरसिंहाय ज्योतिर्मठस्थिताय च ।
करावलम्बदैवाय श्रीलक्ष्मीपतये नमः ॥ १०

बदरीकाश्रमस्थाय नारायणाय विष्णवे ।
तपोभूमिप्रशान्ताय योगनिष्ठाय ते नमः ॥ ११

बदरीवननाथाय नरनारायणाय च ।
नरोद्धारणलीलाय नरानन्दाय ते नमः ॥ १२

हिमगङ्गालकानन्दाभिषिक्तयोगमूर्तये ।
बदरीश्रीमहालक्ष्मीतपोनाथाय ते नमः ॥ १३

हैमशेखरवृत्ताय नीलकण्ठनुताय च ।
वसुधाराप्रवाहाय पुराणाय नमो नमः ॥ १४

गीताचार्याय कृष्णाय वाचामगोचराय च ।
मनोवाक्कायपूर्णाय परानन्दाय ते नमः ॥ १५

सदासक्तसुरक्षाय सदामानसवासिने ।
सदात्मानन्दबोधाय श्रीकृष्णाय नमो नमः ॥ १६

ॐ

शुभमस्तु

श्रीः

ॐ सद्गुरुश्रीत्यागराजस्वामिने नमो नमः

# श्रीलक्ष्मीनृसिंहस्तोत्रम्

नमः श्रीनारसिंहाय नमो हैमालयाय च ।
नमो ज्योतिस्स्वरूपाय नमः श्रीविष्णवे नमः ॥ १

नमो ज्योतिर्मठस्थाय स्वयम्भूयोगमूर्तये ।
योगासन्नसुनिष्ठाय नारसिंहाय ते नमः ॥ २

प्रशान्तमन्दिरस्थाय शालग्रामशिलाय च ।
तपोवर्धनरूपाय नारसिंहाय ते नमः ॥ ३

शैलावृतसुगेहाय शैलमध्यप्रशान्तये ।
शैलगङ्गासुमालाय नारसिंहाय ते नमः ॥ ४

शैलोत्तुङ्गविराजाय शैलसारगृहाय च ।
शैलराजाधिराजाय नारसिंहाय ते नमः ॥ ५

आचार्यशङ्कराराम्यपूजागृहनिवासिने ।
ध्यानयोगप्रतिष्ठाय ज्ञानदाय नमो नमः ॥ ६

करावलम्बरक्षाय करालभवतारिणे ।
तपोहिम्याधिरोपाय सदानन्दाय ते नमः ॥ ७

आचार्यत्यागराजस्वगेयनाटकगीतये ।
शिष्यापुष्पाहिमागीतगद्यामोदाय ते नमः ॥ ८

नमो लक्ष्मीनृसिंहाय नमोऽभयवराय च ।
नमो मोक्षप्रदात्रे च नम ओं ब्रह्मणे नमः ॥ ९

मङ्गलं नारसिंहाय मङ्गलायनमूर्तये ।
मायाम्बुदसमीराय मासमेताय मङ्गलम् ॥ १०

ॐ

शुभमस्तु

ॐ

नमः श्रीत्यागराजाय गद्यारम्भनुताय च ।
गद्यपद्यादिमूलाय गुरुदेवाय ते नमः ॥

श्रीः

ॐ सद्गुरुश्रीत्यागराजस्वामिने नमो नमः ।

# ॥ हिमालयगद्यम् ॥

हिमगङ्गासुरागाय रागतालहिमाद्रये।
हिमभावसुभावाय त्यागराजाय ते नमः॥

ॐ नमःप्रणवाकार-नादब्रह्मानन्द-स्फुरत्तारशिखर-नतमनोन्नमनोद्द्योतनोन्नत-
-ज्ञानहिमालय ! १

ज्ञानानन्दव्योम-मापन-नादानन्दहिमालय ! २

परमानन्दोन्नत-तार-हिमशिखर-सङ्क्रमण-सर्वदिक्प्रसर-सप्तस्वर-बृहत्कौतुक ! ३

परिवारण-परिताप-धूम-तमिस्रान्तर-प्रेरण-गानोन्नम्र-तुषार-धवलाद्रिशिखर ! ४

सांसारिक-धूमपटलाच्छादित-दिव्यानुभूति-हिमगिरिशिखर-दर्शन-ज्ञानपटर ! ५

आत्मानन्द-हिमकुलाचल-निर्माल्यदर्शनाच्छादन-सांसारिक-
-धूमपटलपाटन-ज्ञानेन[4] ! ६

सांसारिकाल्पविषय-पटीरातिपटीर-पटीरात्मदर्शन-नादहिमशिखर ! ७

नादपटीर-पटीर-तौषारशेखर-प्रणिंसन-रागपटीरपटीरपटीर ! ८

सांसारिक-वासना-परिभ्रमण-परिपीडित-दुःखित-मानसात्मलय-
-गाढप्रशान्ति-ध्यान-दृश्यमानानन्द-रजतकुलाचल-
-नादहिमालय-निर्माल्यदर्शन ! ९

दुर्गम्-अकुलशैलावसादित-मानस-प्रहर्षण-स्मेर-स्फुरन्नादकारककुद ! १०

[4]ज्ञान + इन

भावितात्म-मानसैहिकानुभव-कुलाचलाभ्यन्तर-प्रशान्त-सित-तुषार-
-धवलालय-नादब्रह्म-समुद्भेद ! ११

सांसारिक-वैकल्य-सङ्कुल-विह्वल-मनस्तल-दृश्यमान-विदूर-
-प्रशान्ति-दिगन्त-तूष्णींस्थान-तुहिनालय ! १२

प्रतिदिन-तापगणाविरतोपक्रोशान्तराक्षोभाम्बरान्त-
-तूष्णींस्थान-तौषारालय ! १३

अन्वहोद्रावोत्तापार्दित-मानस-चाक्षुष-प्रशम-हिम्य-मौनालय-दर्शन ! १४

व्यावहारिक-लोक-कुश्राव्य-विस्वर-रावोद्विग्नेतचित्तोपशम-
-तूष्णींस्थान-तुषारालय ! १५

ऐहिकोन्मत्त-परुष-शब्दासुरगणातिदूर-तूष्णींस्थान-तुहिनालय ! १६

ऐहिक-प्रवर्तन-परितापोल्लोल-प्रातिकूलिक-शीत-तूष्णींस्थान-
-तौषारकुलाचल ! १७

व्यावहारिक-कुलपर्वत-पारातिदूर-ज्ञान-नीलाकाश-विहायस-
-मौन-नीहारालय ! १८

व्यावहारिक-विकर्ष-वैचित्य-समूह-विदूर-प्रशम-प्रांशु-प्रालेयाचल ! १९

ऐहिकोल्लोल-तुमुल-प्रपलायन-प्रशमन-नाद-प्रालेयाचल-शीतल-
-तूष्णींस्थान ! २०

ऐहिक-हिमारण्याज्ञान-कुहावृताकाश-मध्य-ज्ञान-श्वेतालयेषद्दर्शन ! २१

तामिस्र-धूमिका-परीत-कृच्छ्र-कुलाचल-पार-ज्ञानाभ्रोच्च-मौनहिम-तार-
-कुलगिरिदर्शन ! २२

नीलाखण्ड-ज्ञानाकाश-मौन-तार-तौषारकुलशैल ! २३

व्यावहारिकोन्मत्तेतल्लोक-तापच्छायैकश्राय-ज्ञानप्रशान्त-प्रालेयालय ! २४

अविद्या-कुहेलिकावृत-मनआकाश-ज्ञान-राजरङ्ग-तौषारकुलाचल ! २५

मनउन्नतितल-दृश्यमान-ज्ञान-नीहार-नगकुल ! २६

निर्मलाखण्ड-नीलाकाशात्मक-श्रीरामाभूषण-मुत्याहार-शुद्धश्वेत-
-ज्ञानहिम्यकुलाचल ! २७

अखण्डज्ञान-नीलाकाशोच्च-समुद्दिष्ट-नाद-रजतकुलाचल ! २८

ऐहिक-क्षुद्र-कुलगिरिपार-ज्ञानोच्चाकाश-मध्य-नादोत्तुङ्ग-रजताचलकुल ! २९

कर्मानुबन्ध-संस्कार-पीडितैतच्चित्त-शामन-चारुराग-सङ्गीतहिमालय ! ३०

क्षुद्रैहिकोच्चतर-मौनाखण्डनील-नभो-दीर्घ-तार-नाद-प्रालेयकुलशैल ! ३१

ज्ञानोन्नततल-दृश्यमानोन्मादन-नादहिमगिरिकुल ! ३२

गानगगन-घननील-रागरागमापन-ज्ञानोज्ज्वल-श्वेत-नादहिम्यसानो ! ३३

ध्यानप्रशान्त-निर्मल-मनोभक्तिनीलाकाश-प्रद्योतनोन्नाय-
-नादहिमालयदर्शन ! ३४

आत्मानुभव-स्वच्छनीलाकाश-नादरजताद्रिशिखरोपरि-
-शुद्धसत्त्वश्वेत ! ३५

दूरप्रशान्तिदिगन्त-मौनहिमालय-तारोद्योतन-ज्वाल-ज्ञानसूर ! ३६

अनुपस्थ-प्रशान्तिमण्डल-मौनहिमालय-श्वेत-पीत-पिङ्ग-कौसुम्भराग-
-रागरागकर-नाददिवाकर ! ३७

नादनीलाकाश-दिगन्तःस्फुरण-मौनोदगाद्रि-प्रशान्ति-तुहिनाभ ! ३८

नाद-घननीलगगन-स्फुरण-मौनहिमकुलाचल ! ३९

भाव-राग-ताल-रक्त-मौनहिमालय ! ४०

ध्यानलीन-घननीलख-कवितारस-रक्त-रस-रस-रक्त-नादरसाभाभिमुख-
-शमहिमकुलशैल-साकल्य ! ४१

मनोमौन-हिमकटक-दृश्यमान-परमात्मज्ञान-कटङ्कटकूट ! ४२

गानकटकट-हिमगिरिकटक-गाढमौन-परमेश्वरदर्शन ! ४३

मानसपुटपार-मौन-तुषारशिखराभ ! ४४

घननीरव-हिमकन्दर-गानमृदुवात-रव ! ४५

गाढमौन-हिमालय-गानगाढव ! ४६

मौनध्यान-मनोहिमालय-ज्ञानघन-नीलगगन-घनगानोंकारघन ! ४७

ध्यानहिमालय-नीरव-प्लव-सर-सङ्गीतस्वर ! ४८

ध्यानमौनहिमालय-गाननिर्झर-दिव्यस्वर ! ४९

नैजसर-कृतिमुत्यसर-स्फुरन्नादहिम्याचल ! ५०

ध्यानहिमालय-नादसरिन्मुख-दिव्यानुभव-स्फटिककण-सततनर्तन-
-दर्पणतल-सुप्रसाद-काचमय-कासार ! ५१

परमात्मान्वेषण-हिमारण्य-सुस्वर-खर्जुर-निर्झर ! ५२

पावनचिन्तन-सतततुषार-नामजप-गानरिक्थ-रजताभ-नादहिमथोच्छ्राय ! ५३

गगनाधिरोहण-गानोत्तालहिमालय ! ५४

गगनावरूढ-गानगङ्गे ! ५५

शममौन-हिमनिर्झर-मधुगानगङ्गे ! ५६

भावरागताल-त्रिहिमककुप्प्रभव-नादमोदगीतगङ्गे ! ५७

हिमानन्द-गम्भीरगान-ज्ञानगङ्गे ! ५८

मनोहिमालय-प्रवहापारानन्द-नादगङ्गे ! ५९

मनोहिमालय-लय-गम्भीरनाद-गङ्गागभीर-प्रशम ! ६०

हिमालयगद्य-गङ्गाप्रव-हमनोलय-हिमालय ! ६१

मनोहिम-मौनलय-ध्यानोंकारश्रुति-ज्ञानगोमुखप्रवह-गानगङ्गा-
-नादहिमालयासङ्गत-दिव्यानुभव ! ६२

भक्ताश्रुगङ्गोपस्पर्शितोपान्त-पद-नादोत्तुङ्ग-हिमोच्छ्रय ! ६३

विविधात्मानुभूति-हिमकुलाचल-प्रस्यन्दानुराग-कृतिगङ्गा-श्रुत्योंकारलय-
-नादहिमालयालौकिकसौन्दर्य ! ६४

मधुगानगङ्गा-गलन-रघुरामनाम-निनाद-श्रुतिरागराग-
-रागहिमालयाद्भुतलावण्य ! ६५

नादगङ्गोंकारश्रुति-मापितान्तर्मौन-घनामितज्ञानाकाश-रागघन-नीलाधिकरण-
-स्वच्छ-सत्त्वश्वेतालय ! ६६

मौनमनोहिमालय-ध्यानलय-रागगङ्गोंकारराव ! ६७

मनोहिम-प्रशान्त्यधिकरण-मधुरगानगङ्गारव ! ६८

लोककर्दम-मलिन-धावैकान्त-प्रशान्तिसुखप्रद-नादगङ्गे ! ६९

ऐहिक-परुषोल्लोलैक-समाश्रय-मधुर-गानगङ्गाकल्लोल ! ७०

ज्ञानहिम-तूष्णींस्थान-नादाद्रिभाव-भावाखण्ड-वाक्सम्पद्गङ्गाप्रवाह ! ७१

गाढमौन-हिम्यप्रान्तर-गानगङ्गाझर ! ७२

गङ्गाश्रुति-तारकमन्त्र-झङ्कारगभीर-गभीरमौन-मनोहिमालयगभीर-
-गभीर-झङ्कारसङ्गीतरव ! ७३

गभीर-मनोहिमाचल-तूष्णींस्थान-ध्यानगङ्गा-प्रभास-ज्ञानभेन ! ७४

नामध्यान-हिमगह्वर-प्रभव-गानगङ्गाप्रस्रव ! ७५

श्रीराम-तारकमन्त्रान्तःप्रशान्तिलय-हिमककुप्प्रभव-दिव्य-कृतिगङ्गास्राव ! ७६

श्रीरामचन्द्र-नामाभा-स्फुरन्नादाखण्डानन्द-गङ्गाप्रवाह ! ७७

भक्तानुराग-मानसगङ्गा-स्मित-सङ्गीतपूर्णचन्द्र ! ७८

श्रीरामस्यूम-सौवर्णस्यन्दत्सौवर्ण्य-सङ्गीतगङ्गाह्लाद ! ७९

ईश्वरानुभूत्यपरिमितानन्द-सुवर्णप्रवाह-कीर्तनसौवर्ण्य-गङ्गाह्लाद ! ८०

सांसारिक-वासनैकधाव-दिव्यहिम्य-गीतगङ्गाप्रसर ! ८१

संसारश्रान्ति-तप्तात्म-स्वागतानन्द-गान-ज्ञानत्यागराजगङ्गे ! ८२

मनस्ताप-प्रशमन-मौनध्यान-हिम्यस्राव-शिशिर-सङ्गीतगङ्गे ! ८३

मनोघन-पाषाणखण्ड-खण्डन-नादद्रव-वेग-लयावह-गीतगङ्गे ! ८४

सज्ज्ञानहिमवत्प्रभव-त्वरितप्रवाह-सङ्गीतगङ्गे ! ८५

सुमनोभाव-नानाराग-लसत्सज्ज्ञानगङ्गे ! ८६

अक्षीणामृतगान-प्रवाह-पुण्यकृतिगङ्गे ! ८७

भक्तिहिमगिरि-दिव्यप्रशान्ति-श्रुति-कृतिगङ्गे ! ८८

नादात्मानन्दानुभवोंकारश्रुति-कृतिहिमगङ्गे ! ८९

श्रीरामसहरि-नामसहस्रार्चिश्चामीकराभ-वाग्गङ्गे ! ९०

श्रीरामराग-नाम-सतत-स्मरणकिरण-रागस्फुरण-लज्जितहीर-रागरागरागगङ्गे ! ९१

श्रीरामराग-रागलास-रागरागगङ्गे ! ९२

श्रीरामसीर-चारुहास-लास-गानगाङ्गेयगङ्गे ! ९३

शरीरमनोऽपमार्जन-दिव्यनामजाल-राग-रागानुराग-रागस्फुरण-
-ज्ञानगानगङ्गे ! ९४

मनोनिर्मल-निश्चलकर-रागताल-ज्ञानात्मज्ञानद-नादहिमद-दिव्यनाम-
-कीर्तनगङ्गे ! ९५

नादहिमालय-दिव्यनामसार-सार-सार-रागगङ्गे ! ९६

रामनामसार-सारपान-दिव्यनामगान-स्नानसौख्य-कीर्तनगङ्गे ! ९७

स्नानसौख्य-ध्यान-नामगान-पानसार-सारगङ्गे ! ९८

ध्यानगङ्गा-स्नानपान-नामगान-तपोयज्ञ-यातदुःख-नीतसुख-ज्ञानगान-
-नादगङ्गे ! ९९

शिवाराम-शिवाराम-राम-हिमाराम-नन्दाराम-रामरामनामगङ्गे ! १००

लोकताप-पाप-हर-रामकृष्णनामसर-नामगानसारगङ्गे ! १०१

लोकतृष्णा-शमन-मनश्शान्तिजनन-लोकनाथनामध्यान-हिमासार-सार-
-गानगङ्गे ! १०२

मदाकुल-लोकसंभ्रम-दविष्ठोन्नत-रामभक्तिहिमाचलोन्नाद-नामगान-
-रागगङ्गे ! १०३

संसार-तापिताक्षित-गीतगङ्गे ! १०४

श्रीराम-सहस्रनामावल्यजस्रधारा-प्रवाहाह्लाद-संहति-संहतिकृतिगङ्गे ! १०५

दुरित-शीतवात-तरणिसुख-नाम-प्लवनसुख-गानधाराखण्ड-वाक्सम्पद्-
-गङ्गाप्रवाह ! १०६

अनन्यभक्ति-हृदयोत्सिक्त-मधुरनादगङ्गे ! १०७

शिष्यशिशु-लालनानन्तानन्द-गम्भीर-गानलहरि-नादगङ्गे ! १०८

संसारराव-तप्तैकान्त-शिष्याप्लावनाह्लादन-शीतल-नादगङ्गे ! १०९

नादानन्द-गङ्गालहरि-निषिक्तैकान्तानन्योपासिक ! ११०

श्रीरामचन्द्र-मन्दहास-चन्द्रहास-लास-लस-वाक्सल-सङ्गीतानन्द-
-शुक्लपटलावृत-शुभ-शुभ्र-शुभ्र-कृतिगङ्गे ! १११

श्रीराम-घननीलाचल-शोभ-प्रतिबिम्ब-स्वच्छ-काचतल-गानगङ्गे ! ११२

ज्ञानघननील-रागरागरागगङ्गे ! ११३

सत्त्वश्वेताभ-पुण्यगङ्गे ! ११४

भक्तिरक्ति-नानाभावानुराग-रागश्वेत-श्वेतनील-घनमरकतश्याम-
-स्वर्णाभ-रागपिञ्जार-कौसुम्भातिनील-रागकोलाहल-
-सप्तस्वरविद्यालास-सङ्गीतरागगङ्गे ! ११५

प्रागुषस्नानादि-प्रदोषध्यानान्तरनुभूत-बहुराग-रागलय-लास-नादगङ्गे ! ११६

कोकिल-घनमधुरगान-मयूरलास-नील-पाटल-हरितशोभ-
-नानाराग-रागगङ्गे ! ११७

संतापितमन-उपसान्त्वन-शिशिर-प्राणगङ्गे ! ११८

अशोष-गानगङ्गा-नादहिमालय ! ११९

नादहिमालय-नामगङ्गा-मधुररव ! १२०

ध्यान-हिमनीरव-नादगङ्गा-मधुररव ! १२१

घनगान-गङ्गारव-घनमौन-श्रुत्योंकार ! १२२

मनोहिम-मौनघन-गानगङ्गारव ! १२३

मनोहिम-घननीरव-रवमधुर ! १२४

ऐहिकाविरत-परुषरव-प्रमथन-प्रशमन-ज्ञानहिमनीरव-नादगङ्गा-
-मधुररव! १२५

संतापन-शब्दावरण-रण-पीडनौषध-नादहिमनीरव ! १२६

सांसारिकोद्राव-परिपीडितात्माशय-हिमतूष्णींस्थान ! १२७

ज्ञानहिमनीरव-नादमधुररव ! १२८

मधुरनादप्रेरण-हिममौन ! १२९

हिमनीरव-मधुररव ! १३०

घनहिममौनप्रकृति-मृदुमधुररव-सुलय ! १३१

मनोग्रस्तान्तर्गाहित-हिम्यप्रशान्तिमौन ! १३२

मनोहिमालय-प्राग्ज्ञानतुहिनवर्ष-ध्यानघननीरव ! १३३

मनोऽचल-हिमाचल-प्रशान्ति-तुहिनवर्ष ! १३४

प्रशान्त-मनोहिमालय-प्रज्ञान-तौषारवर्ष ! १३५

ज्ञानहिमगिरि-गानहिम्यवर्ष ! १३६

मनोहिम-मौनवन-ज्ञानघन-नादहिमवर्ष ! १३७

कीर्तनहिमालयाभूषण-नामनीहारवर्ष ! १३८

नादाद्रि-नामहिमशिखर ! १३९

नामानन्द-राजशेखर-प्रस्रव-नादानन्द-गङ्गाप्लाव ! १४०

ज्ञानोत्तालहिमालय-नादानन्द-राजशेखर-राजशेखरप्रिय-नामानन्द ! १४१

भक्तान्तर्व्योम-सतत-दृश्यमान-कालहरप्रिय-नामरजत-नादवातरायण ! १४२

श्रीरामचन्द्रानन्दकिरण-हैमस्फुरण-ज्ञान-सतततौषार-गानशुक्लशेखर ! १४३

श्रीरामचन्द्रसूर्य-कर्वुर-खर्जूर-प्रकाशित-नादहिमशिखर ! १४४

श्रीरामचन्द्रचन्द्र-चन्द्रलोह-नादहैम-हंसकूट ! १४५

श्रीरामचन्द्र-नामकिरणानन्द-सितशोभ-स्मित-शीत-नादतौषाराद्रिटङ्क ! १४६

नीलाखण्डाकाशात्मक-श्रीरामस्पर्शन-नादोत्तुङ्ग-हिम्यशृङ्ग ! १४७

ईश्वरानुभव-नीलव्योममापन-नामगान-प्रावीण्य-प्रांशुप्रालेयाचल ! १४८

ध्यानहिमालय-प्रशान्त-ज्ञानप्रभात ! १४९

ज्ञानहिमवन-नीरव-मधुररव ! १५०

मनोमौन-हिमोषःप्रशम-मधुरनाद-वियद्ग ! १५१

हिमप्रभातातिप्रशम-रम्य-वर्धन-रमणीय-मधुरगानफुक ! १५२

ज्ञानहिमप्रशम-मौननभ-उड्डीन-मधुगानपदे ! १५३

ज्ञानहिम-मौनवन-मञ्जुस्वन-मधुगानपतङ्ग ! १५४

मनोहिम्यनीरव-मधुरगान-गगनग ! १५५

हिम्यप्रशान्तमन-उड्डीनातिमृदुमधुर-रसगान-दिव्यदिव्यग ! १५६

रागरागच्छवि-नादगङ्गातल-तत्त्वपक्षप्रसार-शुद्धसत्त्व-श्वेतविहग ! १५७

अनुरागहिमालय-भाव-राग-ताल-ज्ञान-रागगाङ्गेय-शुक्लरागराग-
-नादरागोदय ! १५८

हिमालय-कृतिसंहति-सङ्गति-तौषार-शिखराशिरबिन्द्वशिरनाम ! १५९

नादतारगिरि-रागराग-गविष्ठ-गाङ्गेयकण ! १६०

कृतिकुल-हिमारण्य-ज्ञानसीरद्युति-स्फुरद्गीतपत्रक-कविताच्छवि-
-हीरनीहारलव ! १६१

नादहिम-गानपुरट-पटर-ज्ञानसूर ! १६२

प्राणमूल-कवितारस-रसस्फुरन्नादहिम-कुलशैलात्यन्त-रसोद्ध ! १६३

विषादावतमस-शैत्येषच्चण्ड-ज्ञानभास्कर ! १६४

ज्ञानहिमशिखराच्छादन-मनोज-धूमपटल-पाटन-श्रुतिरश्मि-गानभास्कर ! १६५

सांसारिकाल्पसुख-मोहाज्ञान-तमोहर-नादहिम-ज्ञानप्रभातादित्य ! १६६

रागरागहिमालय-रागवृक्षघनघन-परिपेलव-मनसिजपत्र-निर्गलित-
-ज्ञानव्योम-नादभास्कर ! १६७

तमआवृत-मनोहिमवन-ज्ञानज्योतिर्गुलुच्छाच्छादन-ध्यादित्य ! १६८

वैचित्र्य-दिव्यानुभव-हिमप्रवणोद्द्योतन-ज्ञानरश्मि-गानानन्दादित्य ! १६९

ज्ञानांशुगुत्स-कुहावृत-कृतिकुल-कुलहिमगिरि-नादब्रह्मानन्द-शुभ्रशेखर ! १७०

मलिनमनोनयन-प्रखर-किरण-कुवम ! १७१

तपस्कूट-स्फुरद्वैषद्य-खवाष्प ! १७२

रागरागनयन-रागरागस्फुरण-रागरागराग-रजतालय ! १७३

रागनीलाकाश-रागाधिकरण-रागश्वेतालय ! १७४

रागधवलालय-तारस्फुरणाधिकरण-ज्ञानरश्मिराग-नीलाकाश ! १७५

रागानुभूत्यनन्त-नीलगगनदघ्न-रागप्रालेयाचल-देदीप्यमान-ज्ञानराग ! १७६

सततंतुषार-ज्ञानरजताम्बर-शोभित-वाग्घिमालय-रागरागराग ! १७७

श्रीराम-रागकिरण-रागस्फुरण-रागरागराग-रजतालय ! १७८

रागश्वेतशिखर-रागश्वेत ! १७९

रागश्वेतोच्छ्रयप्लव-ज्ञानश्वेताखण्डेश्वरानुभव-घन-नील-बिठद्वयस-
-नादश्वेतालय ! १८०

ज्ञानश्वेत-भर्माम्बर-वाक्पौष्कल्य-रसाभ-सरस्वत्यायतन-नादतुषारालय ! १८१

नीलघनश्याम-श्रीराम-दिव्यानुभव-नीलव्योम-मापन-नामगानोत्तुङ्ग-
-धवलालय ! १८२

ब्रह्मत्व-घननील-दिगन्तर-परिमर्श-नादहिम-रागचन्द्रलोहक-ककुद ! १८३

प्रशान्तिघन-नीलाखण्ड-व्योमोद्यतात्यन्तात्मानन्द-तौषारोच्छ्राय ! १८४

बृहत्तूष्णींस्थान-घननील-दिगन्तर-पर्यन्तोद्यत-नादहिमालय ! १८५

नादनीहारोच्छ्राय-स्नापन-सज्ज्ञानदृशान-सज्ज्ञानदृशान ! १८६

सज्ज्ञानदृशान-नीहारस्नापित-नादनीहारोच्छ्राय ! १८७

प्राणबीज-नादकुलहिमगिरि-तारस्फुरण-प्राणाद्भुतसौन्दर्य ! १८८

जीवयान-बहुलानुभ-वकुलशैल-पाराद्भुतात्मानन्दानुभव-
-नादहिमकुलशैल ! १८९

मौनाखन्डाकाशालौकिकानन्द-प्र्-अहर्षायत-नादरजतकुलाचल ! १९०

सङ्गीतहिमालय-कृतिदेवदारुवार्त्त-वाताय-सम्मृष्ट-सज्ज्ञान-सौमेरुकोस्र ! १९१

परिपेलवानुराग-रागवास-कृतिदेवदारुगहन-प्रान्त-दिव्यानुभव-
-हिमपर्वतोपान्तोद्भास-ज्ञानभेश ! १९२

ऐहिक-परुष-हिमवातच्छाय-नामसुगन्ध-नाददेवदारुवन-कृतिकुटीर-
-कुटुङ्गक ! १९३

संश्रितचित्तोद्वेग-परिताप-प्रशमन-प्रशान्त-मनोहिमनग-गानानन्द-
-दिव्यसुगन्ध-नाददेवदारुझाट ! १९४

मानसहिमाचल-रागदेवदारु-रम्यवाससुवास ! १९५

मनोहिमोपांशु-नाददेवदारु-दिव्यसुवास ! १९६

रागहिमटङ्क-गानदेवदारु-परिमल ! १९७

नीरव-मनोहिमकुलाचल-गानोच्छ्रित-देवदारु-नामस्वादुसुगन्ध ! १९८

भक्तिहिमतट-दिव्यगान-देवदारुसौगन्ध्य ! १९९

घनकृति-घनारण्य-स्मित-रामचन्द्र-सितानन्दरश्मि-स्फुरत्कवितारस-
-रागराग-रस-रस ! २००

रागानुरागामोदामोद-स्वस्थ-स्वतन्त्रामोदच्छायोन्नतोत्तम-
-सत्कीर्तनामोद-पुष्पावर्षामोद-नाददेवदारुककुह ! २०१

शिष्यासङ्गाध्यानच्छाय-सौख्यामोद-मोद-गीतदेवदारुमेदुर-
-नादहिमतल्क ! २०२

ध्यानमौन-परमाधिपत्य-दिव्यनामसामोद-गानहिम-देवदारुवन ! २०३

नादहिमप्रवण-नाम-सौरभ-घन-कृतिदेवदारुघन-घनगान-रम्यारण्य ! २०४

मनोहिम-मौनालय-सुस्वर-सौरम्य-पूरण-कीर्तनदेवदारुवन ! २०५

गीतसुगन्ध-देवदारुवनोत्सङ्ग-नव-नव-नव्य-नामकीर्तन-गङ्गाप्रवह-
-रामानुभूति-दिव्यहिम्याचल ! २०६

दिव्यानुभूति-हिमानन्द-गङ्गातीर-देवदारु-कृतिवार-रामकृष्ण-
-नामपुष्पामोद ! २०७

श्रीरामभक्ति-गङ्गातीर-गानारण्य ! २०८

श्रीरामभक्ति-गङ्गातीर-गानारण्य-सप्तस्वरशाखारूढ-स्वादुस्वर-
-नामकूजन-नादद्विज ! २०९

राजमान-द्विजराजाननालोकन-गानद्विज ! २१०

श्रीरामानुराग-गानप्रवाह-गङ्गातीर-गीतशाखारूढ-शिष्यद्विजाखण्ड-
-नामसङ्कीर्तनानन्द-सुमधुरस्वरवर्धिन् ! २११

श्रीरामानन्द-गङ्गाप्लावि-नामानन्दभक्षि-नादपक्षि-शिष्यानुरागपक्षि-भक्ष-
-मधुरगीत-प्लाव-सार-रागगङ्गे ! २१२

गानानन्दगङ्गातीर-घनमौनारण्य-प्रशम-विकूजितनाम-सङ्गीतस्वन ! २१३

नादमयजीवन-हिमोत्सङ्ग-दिव्यानुभूति-सुवास-देवदारुघन-कृतिघन-
-रामभक्तिशिखर-प्रशान्तिप्रान्त-मधुरगान-पतस ! २१४

नामोच्चारणोच्च-देवदारुवृक्ष-हिमप्रशान्तमनो-भगवद्गुण-स्वानुभव-
-मिष्टगान-चारुस्वर-नादपत्त्ररथ ! २१५

रागहिमारण्य-श्रीराममधुरनाम-मधुरतर-मदोल्लाप-गानपतङ्ग-पतङ्ग-
-पतङ्गवंशज-नामगण-मृदुमधुरकूजन-कृतिपरिकर-हिमकन्दर-
-मदोल्लापोल्लकसित-भक्तदेवदारुगुल्म ! २१६

ईश्वरानुभूति-हैमकलशाभिषेचन-ज्ञानसौरकणावारित-ध्यानहिमवन-
-सिद्ध्यानन्द-मृदुमधुरगान-नादमधुकण्ठ-सरण्ड ! २१७

ज्ञानहिम-भक्तिवन-नामकूजनापर्यन्तानुराग-रागविहग ! २१८

नादहिमकटक-नारायण-नामकूजन-ज्ञानपटाक ! २१९

नादगङ्गोंकारश्रुति-गीतामृत-नामानन्द-सुस्वर-विकिर ! २२०

नामगङ्गाश्रुतिनिनाद-ज्ञानहिमालय-मौनाकाशोड्डीन-नादपतङ्ग ! २२१

नादहिमशिखर-नामकूजनोंकारोत्पत ! २२२

तिमिरयुक्त-मनोहिमकन्दर-डीयमान-नादाभा-पत्रवाहन ! २२३

मानस-हिमालय-प्रशान्ति-सौवर्ण-प्रभातातिमधुर-गानविग ! २२४

मनोमौन-ध्यान-हिमशैल-प्रवण-शैल्यसाधारण-लडह-नामगण-
-सुरभिघन-देवदारुघन-कीर्तनघनघन ! २२५

गानघन-देवदारुवन-सप्तस्वर-विविध-पक्षिनाद-मृदुमधुर ! २२६

नाद-हिमकटकि-तट-विविधद्युति-सप्तस्वर-सौरभ-गान-देवदारुगुहिन ! २२७

श्रीरामानुभूति-हिमालय-भक्तिगङ्गातीर-बहुल-नवनव्यकृति-
-देवदारुवन-दिव्यामोद ! २२८

मनोमण्डल-गाढभक्तिसुवास-भगवदनुभूतिपुलक-
-कृति-देवदारु-विपुलानुकरणातिग-गान-नग-घनान्तर-
-सततरजत-गिरिकूट-स्फुरत्परब्रह्मसंदर्शन ! २२९

मानसोत्सङ्ग-श्रीराम-सुगुणानुभूति-कषायास्तार-रमणीय-निरपाय-
-कृतिदेवदारु-मध्योपांशु-नादमन्दानिल ! २३०

सांसारिक-यात्रोष्ण-पांशुपटलावरण-निवारण-सङ्गीत-प्रांशुप्रालेयाचल-
-नव्य-भव्य-कृतिदेवदारुवन-तिक्त-शीत-हरिनामाहर ! २३१

संसार-यात्रायासापह-चारुसार-रागस्वादुपूर-कृतिनव्यसुगन्ध-
-हिमालयाहर ! २३२

शीत-नीरव-ज्ञानहिमालय-प्रत्यग्र-प्रशमाहर ! २३३

घनमौन-मनोहिमवन-दरि-बहुलतर-प्रशस्त-सप्तस्वर-देवदारुघन-निक्षण-
-प्रयुक्त-मधुरतम-गानधार-घनाघन ! २३४

सत्कीर्तन-घनारण्य-घन-ज्ञानहिमकुलाचल-निलाय-प्रसादतल-
-गाढप्रशान्तिसरोवर ! २३५

निस्तरङ्ग-नीरव-प्रसन्न-प्रशम-मनोहिमसरोवर-प्रतिबिम्बित-नामघन-प्लवमान-
-श्वेत-घनाघन-घनगान-नानाराग-शोभन-ज्ञानघन-नीलगगन ! २३६

कृतिहिमकुलाचल-ज्ञानोच्च-श्वेतगिरि-प्रतिफलन-शमसरोवर ! २३७

मानसतल-दृश्यमान-रागामोदघनाभिरामाभिराम-रामानुभूति-
-समुच्चयघन-देवदारुवनागण्य-गीतकुलाद्र्यन्तर-
-महोन्नत-ज्ञानराजशेखर ! २३८

ज्ञानघननील-व्योमपर्यन्त-नादधवलाद्रि-कविकल्पद्रुम-
-कल्पनातीत-सौन्दर्य ! २३९

पशुमानव-साहाय्यावश्य-व्यथैकनिवारण-समाश्रय ! २४०

कोपवेल-मनस्सान्त्वनानुपम-प्रकृतिसौन्दर्य-दर्शन-नादहिमालय ! २४१

ज्ञानहिमवन-तपःपीडन-सांसारिक-दुःख-भय-भीतीत्यादि-
-राक्षससमूह-भक्षण-जीवन-सवन-रक्षण-भीमाकाली-भीमाकाली-
-भद्रभ्रात्रनुग्रहद-भद्रकीर्तनाचार्यदेव ! २४२

सप्तस्वर-ज्वालामुख-सङ्गीतज्ञान-ज्योतिःपुञ्ज ! २४३

लोककानन-सम्भ्रमण-संतप्तमति-शीत-मतिकिरणसुख-कृत्युद्भिद-
-नामकुसुम-प्रवण-सङ्गीतहिमालय ! २४४

मनःप्रकृत्यखण्डविस्तीर्ण-शीत-सित-रागकिरण-स्नापन-सान्त्वन-
-नादपूर्णचन्द्र ! २४५

मौनमनोऽन्तर्हिमालय-सततदृश्यमान-ज्ञानतौषारोच्छ्राय ! २४६

मनोमौनान्तर्हिमालय-क्षितिजारोहण-सततात्मानन्द-
-तुषार-कुलाचलेश्वरदर्शन ! २४७

नान्यगति-मनोऽनुराग-घननील-विहद्वयस-सततदर्शन-
-नादब्रह्म-सततनुषार-तारशिखर ! २४८

मनोहिममौनाचल-सुगन्ध-दीर्घ-देवदारुदिव्य-कविमनसिज-बीज ! २४९

प्राणद-नामकुसुम-सङ्कीर्ण-कृतिहिम-जङ्गल-भावित-शिशिर-सङ्गीतप्राण-
-सङ्गीतप्राण-सङ्गीतप्राण ! २५०

सङ्गीतप्राण-भाव-राग-तालामोद-चतुर्धाम-नादोंकारश्रुति-शुद्धश्वेतालय ! २५१

ज्ञानहिम-मौनवन-ध्यानघन-नादघन-नामघन ! २५२

दम-शम-हिमवन-ध्यानसुख-नामगान-भजन-गङ्गास्नानसुख ! २५३

ध्यानगङ्गास्नानसुख-नामगङ्गापानसुख-नादगङ्गा-दिव्यज्ञानगोमुख ! २५४

सङ्गीतानन्द-प्रवहालकानन्दा-साहित्यातिरम्य-मन्दाकिनी-
-लयात्मलयावह-भागीरथी-भावातिमधुरगीत-गीताचार्य-
-क्रीडाविहार-यमुना-चतुर्धाम-विशिष्ट-नादहिमालय ! २५५

अविमुक्त-मुक्तिदायक-रघुनायक-पादयुगल-ज्ञानभागीरथी-
-गानालकानन्दा-सङ्गम-सङ्गीतगङ्गाक्षेत्र-नाददेवप्रयाग ! २५६

नारदगानलोल-नामलोल-ध्यानपर-नादतनुश्शङ्कर-केदारक्षेत्र-सप्तस्वरविद्या-
-मन्दाकिनी-बदरीनाथ-पदभक्त्यलकानन्दा-सुसङ्गम-
-सङ्गीतकोलाहल-लास्य-भावरुद्रप्रयाग ! २५७

कर्णसूनु-वंशतिलक-लालन-रागपिण्डार-लालित-नुतिगान-पिण्डारीगङ्गा-
-नामानन्दालकानन्दा-सङ्गम-रागकर्णप्रयाग ! २५८

नन्दनन्दनानन्दन-नन्दवन-वाक्सरणि-कृतिरमणीय-नन्दाकिनी-
-ज्ञानगम्भीरालकानन्दा-सङ्गम-गानानन्द-नन्दप्रयाग ! २५९

मानस-पावित्र्य-धवलगिरिप्रभव-वेदवेदान्तसार-सत्साहित्य-
-धौलीगङ्गा-रागसारालकानन्दा-सङ्गमाजस्रधारा-
-गानप्रवाहाभिषिक्त-विष्णुपाद-विष्णुप्रयाग ! २६०

लौकिककूप-निमग्न-करालम्बन-परब्रह्मानुभव-हिमारोपण-
-श्रीलक्ष्मीनृसिंह-निरन्तरवास-ज्ञानज्योतिर्मय-रागहृत्पीठ ! २६१

नरनारायण-नियतयुत-तपोधाम-बदरीधाम-नियतमनोधाम-
-नियतमनोधामयुतनारायण ! २६२

नरनारायणात्यन्त-बान्धव्य-प्रकटन-पावन-बदरीधामपावन-
-नारायणनामकीर्तन ! २६३

नरनारायण-पर्वतदरी-बदरीधाम-पावन-मनोधाम-ध्यानोंकारश्रुति-
-गानालकानन्दाभिषिक्त-नारायण-मङ्गलविग्रहार्चन-
-नवनव्याक्षोभातिसौरभ-नामकुसुम-रागरागजाल-कृतिजाल ! २६४

मनस्तप्तकुण्डातिसमीप-कविता-रसाति-शीत-दिव्यनाम-
-कीर्तनालकानन्दाप्रवाह ! २६५

श्रीमन्नारायण-प्रत्यक्षस्थल-मनोधाम-पावनकर-
-गीतालकानन्दाप्रवाह ! २६६

नादहिमालय-नानाराग-शिलाखण्ड-विविध-कीर्तन-वाग्जाल-
-श्रीमन्नारायण-मङ्गलविग्रह-तक्षक ! २६७

व्यासाचार्य-कृतेतिहास-सर्वोपदेश-संविद्ध-सरस्वत्यनुग्रहद-
-जयकर-नारायण-नामवार-नमस्कारातिरस-सत्कीर्तन-
-मनोगुहा-दीपन-नरोत्तमावतार ! २६८

ऐहिक-सङ्कट-पर्वत-तट-विपत्ति-भीमप्रवाह-पारोपकार-भीमपराक्रम-
-नामगान-पाषाणखण्ड-पिण्डल ! २६९

कवितारसोद्रिक्त-वाग्वसुधारा-सार-सर्वदिक्परिवारक-दिव्यानुभूति-
-हिमशिखर-श्रीरामचन्द्रनुति-चन्द्रहास-रसस्रव-
-गानालकानन्दालौकिक-रमणीय ! २७०

नादरसानुभूति-रसशिखर-कीर्तन-वसुधारासार ! २७१

संसाराशुग-संभ्रान्तैकैकच्छाय-ज्ञानहिमगह्वर ! २७२

नादब्रह्म-साक्षात्कार-हिमालयारोहणोच्छ्वासित-दुर्ग-तुषारवर्ष-
-विडम्बितैकाग्र-शिष्याग्रण्याश्वासनेषच्चण्ड-भास्कर ! २७३

दिव्यानुभूति-हिमारोहण-परिश्रम-परिवारण-मनःप्रशमन-मधुकृति-
-घनारण्य-चित्तोन्नमनात्युत्कृष्ट-मानस-कराल-धवल-
-धराधर-शिखर-प्रस्रव-गानगङ्गोंकारश्रुति-मनोलय-गुरुवर ! २७४

ऐहिक-हिमारण्याज्ञानान्धकारावसन्न-प्रणयन-कृत्युल्मुक-
-ज्ञानांशूद्द्योतित-नादब्रह्मानन्द-कनकगिरि-शिखरासादन-सद्गुरो ! २७५

नीलगल-रसित-नामरस-भरित-गानघन-प्लवन-नीलवपुषरस-स्वानुभवघन-
-नीलतर-गगन-नादघन-नीलनीरद ! २७६

गानघन नीलगगन-गारुडश्वेतक-शोभमान-रागरागनेत्र-
-गरुडवाहन-रागरागश्वेत ! २७७

नादहिमालय-ज्ञानव्योम-राग-कृष्णघन-घनमध्य-कविता-वैशिष्ट्य-
-ककन्द-रसप्रान्त-गीतार्जुनश्वेत ! २७८

मनोहिमालय-तमोमेघ-संहति-मध्यैकार्जुन-सत्त्वश्वेत ! २७९

ज्ञानानन्द-घन-घननीलात्मानुभव-गगन-प्लवन-नादानन्दघन-शुभ्रघन ! २८०

स्वानुभूति-मनोरम-रामभक्ति-हिमालय-गानरक्ति-पुष्पकटक ! २८१

ईश्वरानुभव-नीलगगन-घनगान-नीलघन-परिपेलव-
-भावश्वेत-सहजान्तर्ज्ञान-परिवरक-हिमशिखरगण-
-दिव्यदर्शनानन्द-कनकाभ-नभोमान-धीघन-नीलधर-
-धारासार-लक्ष्मणाग्रजानुराग-रागगङ्गानीर-स्वरसाहित्यरौप्य-
-हीरस्फुरण-नामगण-नानारागकृति-रागपुष्पावलि-परिकर-प्रफुल्ल-
-चारुस्मित-पुष्पोपत्यकाति-मनोहर-रमणीय ! २८२

नीलनगधर-तनु-नीलनगस्फुर-कृति-श्वेतमुत्यसर-रसगङ्गा-
-रागसार-रामनामगान-हीरहार ! २८३

नीलाभ-सुशोभ-श्रीराम-शोभन-श्वेताभ-मुत्यसर-सत्कृतिसार ! २८४

राग-घन-नीलधर-ज्ञान-फेनद्युति-धवलसर-नामगान-गङ्गासार ! २८५

जप्तनामतारक-तारागण-शतकोटि-स्फुरदमृतगान-शीतकिरण-
-क्षीरवर्षस्नात-नादहिमालय-मापित-नारायणात्मानु-
-भूत्यद्भुतानन्द-नीलव्योम-वैशाल्य ! २८६

मरकतमणिवर्ण-श्रीरामनुति-रागकृति-हिममाला-मरकतमणि-
-रागराग-रागसरोवर ! २८७

अनुरागसरोवर-मानसादर्शतल-नामकलधौतमय-
-स्तुतिकल्लोलाभ्यर्चिताभिराम-रामराग-राकाचन्द्र ! २८८

अभिराम-रामराकाचन्द्राभिनन्दन-मानसादर्शतल-नामकलधौतमय-
-गानकल्लोल-ज्ञानहिम-नादहैमसरोवर ! २८९

श्रीरामचन्द्र-हिमकिरण-हीरस्फुरण-रागानुराग-राग-धवल-तरल-तरङ्ग-
-मनोहिम-हैमरागसरोवर ! २९०

मनोहिम-ज्ञानसरोवर-प्रतिबिम्बित-सङ्गीत-हाटकबिम्ब-श्रीसीतारामचन्द्र ! २९१

सत्कीर्तन-घनारण्य-घन-ज्ञानहिमकुलाचल-निलाय-प्रसादतल-
-गाढप्रशान्तिसरोवर ! २९२

निस्तरङ्ग-नीरव-प्रसन्न-प्रशम-मनोहिमसरोवर-प्रतिबिम्बित-नामघन-प्लवमान-
-श्वेतघनाघन-घनगान-नानाराग-शोभन-ज्ञानघन-नीलगगन ! २९३

कृतिहिमकुलाचल-ज्ञानोच्च-श्वेतगिरि-प्रतिफलन-शमसरोवर ! २९४

परमार्थ-हिमारोहण-साधना-परिश्रमोपशान्त्वन-
-ज्ञानहैमकुण्ड-प्रशान्ति-हिमसलिल ! २९५

ध्यानप्रसन्न-मनोहैमसरोवर-प्रतिबिम्बित-मौनहिम-
-नादतौषारोंकाररूप ! २९६

नव्यप्रशान्ति-शीतलसमीर-घनमौन-प्रवण-गान-प्राणात्मानुभव-
-प्रालेयकुलाचलेश्वरदर्शन-कविमानस-शुद्धश्वेत-तौषाराभिषिक्त-
-नादोत्तुङ्गनाथ ! २९७

त्रितापार्तिहर-त्रिलोकाधिपति-त्रियुगिनारायण-नामगान ! २९८

ज्ञानकेदारमार्गणी-नामगान-मन्दाकिनीनाद ! २९९

ज्ञानकेदार-नादमन्दाकिनीतीर-नाममन्दानिल ! ३००

ज्ञानकेदारनाथार्चन-नादब्रह्मकमल-रागराग-रागवास-रागमानस-
-रागसुवास ! ३०१

ज्ञानकेदार-मौनहिमोपान्त-रागहिमकिरण-वर्षण-रागराग-
-रागराकाराग ! ३०२

शिवशङ्कर-नादतनुर्हिम्यालय-ज्ञानसततश्वेत-शेखर-हैमराजत-
-हिमामृतकरवर्ष-स्नापन-रामराग-रागराग-राकाशशिकिरण ! ३०३

दुरित-तुहिनातिपात-दुर्गम-शिशिरातिवात-प्रकम्पित-पथभ्रंश-परिभ्रमित-
-निरुपायैकाबलानुयायि-करालम्बन-निरामय-नेतृ-सद्गुरो ! ३०४

मोक्षगङ्गामूल-ज्ञानगोमुख ! ३०५

मनोमौन-हिमसंहति-ध्यानगोमुख ! ३०६

ध्यानगोमुख-प्रवह-गानगङ्गे ! ३०७

श्रीराम-सत्पाद-ध्यानगोमुख-प्रसर-सुरगान-गङ्गाप्रवाह ! ३०८

ध्यानपरिशुद्ध-तौषार-परीवाहोंकारनादगङ्गे ! ३०९

दिव्यानुभूतिगोमुख-स्रावोंकारनादगङ्गे ! ३१०

ध्यानगोमुख-प्रशान्त-हिमनक्ताद्भुतशोभ ! ३११

ध्यानगोमुख-घोषणोंकारनाद-गङ्गास्मित-श्रीरामचन्द्र-
-सितहिमरात्रि-तूष्णींस्थान ! ३१२

अन्तर्लयोंकारश्रुति-ध्यानगोमुख-घोषण-नादगङ्गा-लास-सस्मित-
-सस्मितश्रीरामचन्द्र-द्युतिलसत्कविताप्रेरण-तुहिनगिरिशिखर-
-मनोहिमालय-नादप्रशम ! ३१३

परिवारण-दिव्यानुभूति-हिमशिखर-श्रीरामचन्द्र-मृदुस्मय-विस्मय-
-हर्षकार-तारस्फुरन्नामतारक-तारागण-नादानन्द-नीलवियत्प्लवन-
-नामानन्दश्वेत-ध्यानगोमुख-प्रवह-नामकीर्तन-गङ्गोंकारश्रुतिसुख-
-मौनहिमालयालौकिकाद्भुत-लावण्य ! ३१४

दिव्यान्वेषणाखण्ड-दिव्य-घननीलोज्ज्वल-ज्ञानप्रालेयमय-
-गानगङ्गावाह-मौननीहार-कुलधराधरादरणीय ! ३१५

ज्ञानतपोवन-नादप्रशान्तिलय ! ३१६

नादहिम-तपोवन-ज्ञानप्रशान्ति-सरोवर-प्रतिबिम्बित-तार-
-तारकनामानन्दानुभव-शिवलिङ्गशिखर ! ३१७

मनस्तपोवन-लयसरोवर-प्रतिफलित-ज्ञानश्वेताचल ! ३१८

सत्त्वश्वेत-हिममाला-शोभित-नादातिनीलान्तराल ! ३१९

ज्ञाननीलाकाश-श्वेतमुत्याहार-मनोहर-नादहिम्यकुलशैल ! ३२०

महन्नीलदिव्य-दिव्यप्रालम्ब-कमनीय-नादहिमकुलाचल ! ३२१

स्वानुभूतिहिमालय-ध्यानोषःप्रशान्ति-ज्ञानघन-नीलगगन-
-जाम्बूनदद्युति-ज्वाल-प्रणवनाद-पयोद ! ३२२

परिवारण-ज्ञानश्वेताम्बर-नादाचल-प्रवह-भर्म-शुभ्राम्बर-लसद्रागगङ्गा-
-विप्रकृष्ट-हिमद्रोणि-कीर्तनघन-सरल-
-भोजवनाखण्डविस्तीर्ण-व्याप्त-गाढप्रशान्तिलय-
-नादहिमालयासङ्गत-दिव्यानुभव ! ३२३

परमानन्द-घननील-वियन्मापन-प्राशस्त्य-प्रालेय-सानु-परीत-कृतिप्रवण-
-दिव्यानुभूति-हिमालय-नर्तन-निर्झराजर-नादगङ्गे ! ३२४

गाढमौन-ध्यानतौषार-संहति-प्रभव-दिव्यानुभूति-धारासार-
-कृतिसंहति-सङ्गत-नादगङ्गाप्रवाह ! ३२५

गान-गङ्गोत्तरी-क्षेत्र-रम्य-नादगङ्गा-गम्भीर-राग-देवदारुवन-वास-
-प्रशान्तिलय-कीर्तनजाल-नानाशिलाखण्ड-
-दिव्यनामगुण-त्वक्षण-लावण्य ! ३२६

प्रावण्यभरित-भावनाहरित-सानु-दिव्यान्वेषण-तौषारालय-ध्यानमानस-
-केदारसरोवर-प्रसक्ति-प्रतिबिम्बित-नादहैमसानो ! ३२७

ज्ञानकेदारगङ्गा-गङ्गाभागीरथीलय-रागसङ्गम-गानगङ्गोत्तरी-क्षेत्रलावण्य ! ३२८

श्रीरामहेति-हेम-हीर-गौर-गीततरङ्ग-स्फुरण-रागरागमय-नादोंकारगङ्गे ! ३२९

-

मनोवेगस्तम्भन-महावेगस्यन्दन-बहुराग-रागरागगङ्गे ! ३३०

मनोलय-गौरीकुण्ड-नादोंकारलय-घांषण-रागवर्ष ! ३३१

गानगङ्गा-गौरीकुण्ड-सप्तस्वर-रागजाल-सुरधनुस्सौन्दर्य ! ३३२

रुग्म-रूप्य-हरीन्द्रनील-नीलपाटल-पीतल-नानाराग-रागभासमान-नादगङ्गे ! ३३३

स्फुरद्रागलहर्योंकारनादगङ्गे ! ३३४

गानगौरीकुण्ड-सत्कीर्तनशिलाखण्ड-नानारागनामरूप-
-लक्षण-तक्षण-काव्यगङ्गे ! ३३५

गानगङ्गोत्तरी-रागदेवदारुवन-नादप्रशान्ति-मौनलय ! ३३६

रागगङ्गोत्तरी-कृतिदेवदारुगहन-प्रशम-मृदुशीतवात-दिव्यसौगन्ध्य ! ३३७

राग-रुद्रगङ्गानुराग-भागीरथी-सङ्गम-दर्शन-दिव्यगीत-
-पाण्डवाङ्गन-तपःपुण्यक्षेत्र ! ३३८

विक्षेपगण-विदूराज्ञातवास-मनस्तपोरन्ध्रैकान्त-सुखप्रद-
-प्रशान्ति-पाण्डवाङ्गन-प्राङ्गण-मधुरगीतगङ्गे ! ३३९

देवदारू-कृतिजङ्गल-दिव्यानुभूति-गाढ-हिमकन्दर-रागलास-जाह्नवी-
-भावलयभागीरथी-सङ्गम-गानगङ्गाह्लाद ! ३४०

ज्ञाननीरव-हिमकन्दर-कृतिदेवदारुगण-नादशीतवात-रागगङ्गा-
-मधुस्वर-मनोलय-हिमप्रशम ! ३४१

अवगत-स्वानुभूतान्तर्व्याप्तोंकार-नादगङ्गा-हिम्यप्रशान्ते ! ३४२

ज्ञानघन-नीलनाक-मापन-रागहिम्यशिखर-दिव्यानुभव-प्रवण-नव्य-
-नामातिसौरभ-कृतिदेवदारुवन-प्रचुर-कठिनावरोध-पाषाणखण्ड-
-ताडन-बहिष्कर-नादगङ्गा-दिव्यप्रवाह-हरिशिलाखण्डानुराग-
-रागहिमालय ! ३४३

चारु-बहुराग-विविधाकृति-कृतितल्लज-प्रस्तर-प्रचुर-पृथुपुलिन-ज्ञान-
-रागरागहिमप्रवण-गानगङ्गा-नर्तनकल्लोल ! ३४४

सप्तस्वर-रागताल-लयापाराद्भुत-सौन्दर्य ! ३४५

हरिशिलारूपाभिषेचन-नादगङ्गाप्रवाह ! ३४६

प्रदोष-प्रशान्तिलय-रागगङ्गा-कन्दर-लावण्य ! ३४७

परमहर्ष-हैमशिखर-परीत-विप्रकृष्ट-गानगङ्गा-निम्नभू-
-परमोत्कृष्टसौन्दर्य ! ३४८

गाढानुराग-गङ्गोपरि-गाङ्गेय-गानगाढव ! ३४९

गायत्रगङ्गा-मञ्जरमालि-श्याम-मञ्जुगोत्र-गात्र-रामनाम-
-कीर्तनोत्तरकाशीक्षेत्र ! ३५०

परमात्म-श्रीराम-पद-दरी-घर्घरी-गङ्गा-रागप्रवाह-घननीलाचल-
-श्रीरामालिङ्गन-घननील-घनाघन-घनगान ! ३५१

ध्यानयोग-गोमुखोद्भव-ज्ञान-गान-भागीरथी-रसवाक्सरस्वती-युक्त-
-दिव्यानुभव-बहुलतम-हिमशिखर-कृतिप्रसर-सरस-रस-हैम-
-हिमसंहति-प्रभव-दिव्यनाम-कीर्तनालकानन्दा-सङ्गम-श्रीरघुनाथपद-
-देवप्रयाग-दिव्यगान-गङ्गाप्रवाह ! ३५२

ज्ञानालकानन्दा-भक्तिभागीरथी-सङ्गम-सङ्गीतगङ्गा-सौवर्णसौन्दर्य ! ३५३

स्वच्छ-प्रशान्ततल-दर्पणदृश्यमान-परिवारण-वेदोपनिषद्वाक्य-कृतिबहुलतरु-
-प्रावण्य-हिमराग-ज्ञानभक्तिसङ्गम-सङ्गीतगङ्गा-गाढदिव्यानुभव ! ३५४

मरकतमणिशोभ-श्रीरामराग-रागगङ्गातीर-सैकतैकान्त-प्रशान्तिसुख ! ३५५

नानाराग-कृतिकुलपर्वत-परिवारित-नादहिमद्रोणि-नामगङ्गाप्रवाह ! ३५६

हृषीकेश-नुतिगेय-श्रुतिमूल-कृतिकूल-गङ्गोत्कूल ! ३५७

प्रागुष-प्रदोष-प्रशान्त्यास्नाताध्यातानन्द-नादगङ्गे ! ३५८

अनन्यभक्त्यन्तर्हिमालय-स्वच्छमनः-प्रागुषःप्रशान्त्यपाररमणीय-
-कृतिवार-तारकनाम-तारागण-स्फुरणेश्वरानुभवानन्त-नीलपुष्कर-
-स्मेर-हृषीकेश-राग-राग-ज्ञान-वैराग्याचल-परिवारित-रागगङ्गा-
-पावन-प्रसन्न-शीतल-सलिलात्यूष-स्नातैकभक्तात्मलय-
-मनोहिम-गह्वर-प्रवह-रागगङ्गातीराचल-मनउपलकोपरि-परिपेलव-
-मनसिज-पक्षिजाल-मृदुमधुरव-तारध्वनि-ध्यानगङ्गोंकार-
-श्रुतितुम्बर-सहित-सङ्गीताराधित-मत्प्राण-सद्गुरुदेव ! ३५९

ज्ञानसूर्यग्रहणसमय-त्रितापच्छायापीडन-निग्रहणार्थ-
-त्रिसमयस्नात-ध्यात-नादगङ्गे ! ३६०

त्रितापच्छाया-मायावृत-ज्ञानसूर्यदर्शन-प्रापण-ध्यानगङ्गातीर ! ३६१

पारमार्थिकमार्ग-रोध-दुर्ग-पाषाणखण्ड-घन-पारोंकारश्रुतिसह-
-नादगङ्गाप्रवाह ! ३६२

पारमार्थिक-मार्गावरोध-दुर्ग-पाषाणघन-लङ्घन-परिश्रम-परिवारण-
-भगवन्नाम-त्वरितप्रवाह-शिशिरसुख-कृतिगङ्गावाह ! ३६३

पारमार्थिक-मार्गरोध-पाषाणखण्ड-परिक्षति-रोपण-शिशिर-
-नामसुख-दिव्य-कीर्तनगङ्गाप्रवाह ! ३६४

जीवाटन-नादगङ्गा-स्नान-मार्ग-त्रितापदार्षद-भङ्गरिष्ट-पाद-
-खञ्जनैकाक्यैक-करावलम्ब ! ३६५

विषयतृष्णा-क्षयकराक्षय-गीतामृतगङ्गे ! ३६६

अक्षिततृष्णा-कारणाक्षयामृत-गानगङ्गे ! ३६७

पौनःपुन्य-नुत-स्नात-पुण्य-गीतगङ्गावाह ! ३६८

राग-राग-विलसित-नादगङ्गे ! ३६९

हिममौनप्रशम-दिगन्तराल-प्रणवनाद-गाङ्गाभ ! ३७०

प्रवाह-रयोपलोपरि-परिनन्दन-गानेदमल्पपदि-परिनन्दनोंकार-नादगङ्गे ! ३७१

सद्गङ्गातीर-निनादित-दिव्यनाम-सत्कीर्तन ! ३७२

पुण्यगङ्गातीर-प्रगीत-पुण्यामृतकीर्तन ! ३७३

मधुगङ्गाश्रुति-मिश्रित-मधुगीत ! ३७४

मनोगङ्गातीर-गानश्रुत्योंकार ! ३७५

रागगङ्गा-स्नातानुराग-गङ्गा-स्नापित ! ३७६

गानगङ्गास्नात-भक्ताग्रप्रत्यक्षज्ञानगङ्गे ! ३७७

भक्ताधीत-प्राण-प्राणगङ्गे ! ३७८

तमोगाहितान्तर्गाह-गान-गाङ्गाभ ! ३७९

सांसारिक-प्रचलित-मनः-प्रशान्त-गान-गङ्गोत्सुर-ज्ञान-गाङ्गाभ ! ३८०

राग-राग-गङ्गातीरानुराग-राग-राग-गाङ्गाभ-सन्ध्यादीपाराधित ! ३८१

भावगम्भीर-गभीर-गभीर-गङ्गानाद-नादहिमालय-गानघन-नीलगगन-
-ज्ञानज्योतिःपुञ्ज-रजतस्फुरत्-कृति-श्वेत-रागप्रभो ! ३८२

मनोगङ्गातीरज्ञानप्रशान्तसायंसन्ध्याकाशनादनारङ्गगाङ्गाभाभ्र ! ३८३

पापनिग्रहण-श्रित-संत्राण-ज्ञानहैमवलभि-प्रसर्ग-नामगानगङ्गा-हरिद्वार ! ३८४

लोकपापोपमार्जन-हरिभक्तिहिमालय-दुरोदर-स्वर्गावरूढ-
-धरणीतल-प्रवह-पावन-दिव्यनाम-गानगङ्गा-हरिद्वार ! ३८५

इहलोक-यान-ताप-श्रान्त-मनस्स्वागत-हरिभक्तिगङ्गा-स्नानाकर्षण-
-ज्ञानहिमालय-मार्गदर्शन-दिव्यनाम-गानगङ्गा-हरिद्वार ! ३८६

अन्यून-स्फूर्तिधारा-कारणान्यूनाक्षीणामृत-गीतगङ्गे ! ३८७

दर्शनमात्र-हृदयानन्द-लहर्युत्थापन-नानाराग-रङ्ग-नर्तन-हर्षद-नादगङ्गे ! ३८८

गाहितमात्र-क्लान्तिहर-हरिनाम-स्मरणानन्द-लहरि-शिशिरसुख-लालन-
-शरीराश्वासन-मनोह्लादनोंकारश्रुत्यतिवेग-नादौघ-ज्ञानगङ्गे ! ३८९

सप्तस्वरदीप-ज्योतिर्बिम्ब-सौवर्ण-रागमय-नादगङ्गे ! ३९०

सौवर्ण-सौवर्ण-रागलास-राग-कृतिगङ्गे ! ३९१

ध्यान-सन्ध्यावेल-गानारति-सौवर्ण-लास-राग-गङ्गाराग ! ३९२

रागाभा-दीपाराधित-गानगङ्गे ! ३९३

गानाभा-दीपाराधित-ज्ञानगङ्गे ! ३९४

ज्ञानदीपाभा-व्याप्त-नादार्थिहृन्नादगङ्गे ! ३९५

नादहिम-नामसार-राग-रागगङ्गे ! ३९६

प्रशान्त-मानस-हिमालय-लय-राग-गान-दीपाराधित-दिव्यगङ्गे ! ३९७

गङ्गालय-यमुनाराग-केदार-ज्ञान-नरनारायणध्यान-बदरीप्रशान्त-
-चतुर्धाम-वैशेष्य-नादहिमालय ! ३९८

कपिश्रेष्ठ-भक्त-कपिभक्ति-कपिपुच्छ-हिमपृष्ठ-प्रभव-भागवत-
-कथासारानुभवानुसार-कृतिसार-यमुनासार ! ३९९

यमक-गमक-यति-प्रास-परिष्कार-राग-लय-सर्वलक्षण-साहित्य-
-कृतियमुना-कीलालेन्द्रनील-राग-राग-सरणि-प्रतिफलितेन्द्र-
-नीलाभ-यमुनापति-विहास ! ४००

प्रकृतिसौन्दर्य-सुस्वरजाल-स्फुरण-सूक्ष्मचेतःकवि-हृदयानन्द-
-कृतिपुष्पावर्ष-पर्युपासित-यमुनातीर-लीलाविहारि-श्रीकृष्ण ! ४०१

सगुणध्यान-निर्गुणज्ञानात्मलय-हिमत्रिककुदोद्भव-सङ्गीतगङ्गा-
-साहित्यसरस्वती-लययमुना-त्रिवेणीसङ्गम-
-दिव्यकीर्तनप्रयाग ! ४०२

दर्शनमुक्तिद-पवित्रगङ्गा-श्रीकृष्ण-रासविहार-यमुना-
-सङ्गीतसाहित्य-सौभग-सरस्वती-त्रिवेणीसङ्गम-स्नानफलद-
-भाव-राग-ताल-सङ्गम-दिव्यनाम-सत्कीर्तनप्रयाग ! ४०३

दर्शनमुक्तिद-सत्पाद-सत्पादभक्तिप्रवह-पावन-नामगानसारगङ्गे ! ४०४

सत्पादप्रवह-पावन-सन्नामगानगङ्गे ! ४०५

भवभाषित-भवतारण-तारकमन्त्र-गङ्गाप्रवाह-पुण्यगीतकाशीक्षेत्र ! ४०६

श्रीरामकृष्ण-ख्याताख्यात-कालीगङ्गाप्रवाह-दिव्यनामभजनगान-
-पुण्यधामन् ! ४०७

जीवात्मगङ्गा-तादात्मीकर-परमात्मानन्दसागर ! ४०८

अनुरागगङ्गा-तादात्मीकर-ज्ञानानन्दसागर ! ४०९

रागगङ्गा-तादात्मीकर-रागसागर ! ४१०

मनोहिमोद्भव-स्तुतिगङ्गा-तादात्मीकर-गानानन्दसागर ! ४११

कविता-रसोत्तरङ्ग-रागानुराग-गङ्गाभिमुख-स्वागत-तादात्मीकर-
-नादानन्दसागर ! ४१२

स्वागत-सहर्ष-सित-तरङ्ग-प्रग्रह-मुदार्णव-घननीलराग-रागगङ्गाशय ! ४१३

ज्ञानाकाश-पतित-नादगङ्गा-लय-तोयालय ! ४१४

जीवब्रह्म-द्वैताद्वैतभाव-व्यक्तीकरण-हिमगङ्गा-गङ्गासागर-सूक्ष्मव्यापक ! ४१५

रागमानस-पुष्पानुराग-मधुगङ्गासागर ! ४१६

रागमानस-पुष्पानुराग-मधुगङ्गासागर-राग-सौवर्णाकर-राग-स्वर्णोदयराग ! ४१७

हिमगङ्गा-सागर-राग-रागार्द्रमानस-कविताप्रेरणोद्भाव-रागमय-
-सन्ध्याकाश-गाङ्गेयराग-राग ! ४१८

संसारसागरोपर्य-ज्ञान-गडेरावृत-ज्ञानहिम-हैमशिखर-
-देदीप्यमान-प्रज्ञानप्रभात ! ४१९

भक्तानुराग-सागर-क्षितिज-मानसघन-घनाघन-हिमकुलशैल-स्वर्णशिखर-
-देदीप्यमान-ज्ञानप्रभातराग ! ४२०

मानसार्णोभासमान-मनोजोर्मि-प्रतिबिम्बितात्मानुभवारुण-
-हिरण्य-रञ्जितैतदुपासिकान्तःपूर्व-दिगन्तराल-द्योतन-
-नादोत्तुङ्ग-हिमकुलगिरि-शिखरोपरि-श्रीरामचन्द्रोदयब्रध्न-
-ज्ञानकनककर ! ४२१

नादहिमालय-नामगङ्गा-ज्ञानसागर ! ४२२

ज्ञानहिमालय-नादगङ्गानन्दसागर ! ४२३

ज्ञानघन-नीलगगन-चारुसार-प्लवन-पिचुतूल-श्वेतघन-कृतिकूल-
-घननीलाकृति-लावण्यराम-परमात्मानुभव-मनःपरिपक्व-
-रागघन-नीलघन-नाद-नीलगगनदघ्न-नामरजत-गानहिमगिरिकुल-
-श्रीरामसागर-सङ्गीततरङ्गाधिक्रमण-ज्ञानहिमोद्भवानुराग-रागगङ्गाप्रसर-
-प्रपञ्च-प्रशान्ति-प्रभात-प्रदोष-रम्योपचय-शब्दजाल-पक्षिरव-

-मृदुमधुरातिशयन-चारुस्वर-तमस्तमोज्ञानमहिर-राग-रस-रसन-
-कविताप्रेरण-रागशीतमतिकिरण-क्लान्तिहर-प्रशान्तिद-
-शुद्ध-नव-नव्य-कीर्तन-हिमपवन-मत्प्राण-सद्गुरुदेव ! ४२४

समर्पितैकान्तोपासिका-हिमाद्रिगङ्गा-गङ्गासागर-पर्याप्त-प्रकृतिरमणीय-
-दिव्यानुभव-समुच्चय-दिव्यपदयुगल ! ४२५

एकान्तभक्तानुरागगङ्गासागर-जलाभिषिक्त-पूज्य-सुपदयुगल ! ४२६

ध्यानमौन-दिव्यनामगान-भूसंहति-सङ्घट्ट-संसारदुःखसागर-शुषोद्भूत-
-सज्ज्ञानोत्तालहिमालय ! ४२७

मनस्स्थैर्य-मापित-महोन्नत-ज्ञानहिमालय ! ४२८

सङ्गीतशास्त्र-संस्कृतपाण्डित्याखण्डविस्तीर्ण-हिमालय ! ४२९

हिमालयायामाद्यन्त-निनादित-दिव्यामृतकीर्तन ! ४३०

सङ्गीतहिमालय-विराजमान-सौन्दर्यदेवताराधन-पुष्पामोद-
-नानारागसुकीर्तन ! ४३१

ज्ञानव्योमोदन्तुर-मनोहिम-घनमौनोदञ्चित-नादगङ्गा-ध्यानगोचर-
-साक्षात्कार-नादब्रह्मानन्द ! ४३२

मानसतल-दृश्यमान-मौनसन्ध्याकाश-रागघननील-दिव्यानुभूति-
-नभस्स्पर्शन-ज्ञानद्युति-हैमशेखर-कवितारस-रसप्रान्त-
-घनगानात्मक-घननील-भावघन-घनकृत्यूर्मि-कुलधर-
-कृतिकुलधर-व्यत्यस्त-रागगङ्गा-निनादैतदात्मक-संतिक्त-प्रशान्ति-
-शीतवात-व्याप्त-नादहिमालय-कृत्स्न-बृहद्दर्शन ! ४३३

हिमालयस्मित-सितरश्मि-निस्तरङ्ग-दर्पणसरोवर-प्रतिबिम्बित-शुभ्राम्बर-
-हैमशिखर-प्रशान्त-रमणीय-बहुराग-कुसुमकन्दरातिनील-
-गगनागण्य-तारागण-नव्य-सुशीतलाहर-कुलपर्वत-प्लवन-

-घननील-श्वेतघन-घनदेवदारुवन-नीलाचलालङ्करण-
-बहुल-धारापात-तौतिकसर-हिमसंहतिप्रभव-हिमद्रोणिप्रवह-
-गङ्गासार-हिमालयासमान-सौन्दर्यानन्द-सञ्चयास्पद-ब्रह्मानन्द ! ४३४

अगण्यानुभूति-कुलगोत्र-पाराखण्डाभाष-नीलवियत्प्रशान्त-
-महीजीवालौकिक-शोचिष्ठ-रजतसानुकुल-प्रत्यक्षानुभूत-
-परब्रह्मसंदर्शन ! ४३५

प्रकृतिसौन्दर्य-सर्वाधिपत्य-प्रशान्तहिमाद्रि-पवित्रगङ्गा-
-धवलधारानेक-मृदुमधुर-स्वरजाल-लयानुभूतैकब्रह्मन् ! ४३६

अरुण-कौसुम्भ-पिञ्जार-खर्जूर-रजताभ-स्फुरद्धिमाद्रि-
-तारशिखरौजसाभास-परञ्ज्योतिर्मयाखण्डानन्दरूप ! ४३७

रागानुराग-विकसित-मानसपुष्पोपान्ताधिष्ठान-नादहिमकुल-महीधर ! ४३८

मनोमौन-हिमालय-चारुस्मित-भक्तिभावित-मानसपुष्पोपान्त-
-ध्यानगङ्गोंकारश्रुति-प्रगीत-नाददेव ! ४३९

नादासक्तिमनोगङ्गातीर-नामजाल-पुष्पावर्षाञ्चित-नादोच्छ्रेय-हिमालय ! ४४०

नादब्रह्मानन्दानन्तनील-नभोदघ्न-रागहैमशेखर-ज्ञाननगवपुर्गान-गङ्गा-
-प्रवाह-स्नात-भक्तसमूह-प्रणामोपान्तपद-नादहिमालय-
-विश्वरूपदर्शनप्रसाद ! ४४१

नादकैलासारोहणमार्ग-परिश्रम-विश्राम-नामनारायण ! ४४२

नादकैलासारोहणमार्ग-ध्यानोंकारपर्वत ! ४४३

मानस-कैलासगिरिशिखर-सततश्वेत-प्रालेय-ज्ञानमय-नादोंकाररूप-
-सदाशिव-त्यागराजस्वामिन् ! ४४४

ध्यानमानससरोवर-प्रतिबिम्ब-नादकैलास-ज्ञानप्रालेयशिखर ! ४४५

नादनीलाकाश-मापन-ज्ञानतुहिनश्वेत-कैलासशिखर-प्रतिबिम्बानुराग-
-राग-राग-मानससरोवर ! ४४६

नादब्रह्म-शुद्धश्वेताचल-प्रतिबिम्ब-ज्ञानमानससरोवर ! ४४७

प्रशान्त-ज्ञानमानससरोवर-प्रतिबिम्बित-नादब्रह्म-शुद्धश्वेतालय ! ४४८

एकभक्तैकान्तमानसानुराग-प्रसादसरोवर-प्रतिबिम्बित-नादहिमालय ! ४४९

प्रशान्तानुराग-मानससरोवर-प्रतिफलन-रागोत्कृष्टहिमालय ! ४५०

ध्यानलीन-मानससरोवर-प्रतिबिम्बित-प्रशान्त-मौनहिमालय ! ४५१

मनोमौन-हिमसरोवर-ध्यानप्रशान्तितल-बिम्बित-ज्ञानश्वेतालय ! ४५२

शममौन-हिमालय-लसत्-सत्सङ्गीतसरोवर ! ४५३

ज्ञानमानससरोवर-मृदुमधुर-गानतरङ्ग ! ४५४

प्रशान्तमानससरोवर-ज्ञानगभीर ! ४५५

अज्ञानधूमिकावरण-भेद-करालोन्नत-ज्ञानसानो ! ४५६

मनोमौनसरोवर-प्रशान्ततल-प्रतिबिम्बित-ज्ञानस्वर्णसानो ! ४५७

सङ्गीतमानससरोवर-सुस्वर-श्लक्ष्णसलिल ! ४५८

दिव्यानुभूति-कमनीय-नीलसलिल-पूरित-रागमानस-सङ्गीतसरोवर ! ४५९

ध्यानमानससरोवर-ज्ञानतुहिनाचल-पृष्ठ-नादस्वर्णोदयेन[5] ! ४६०

दिव्यानुभूति-मानससरोवर-काव्यालाप-नर्तन-तरङ्ग-स्फुरण-
-सङ्गीतसूर्य-स्वर्णकिरण ! ४६१

[5]स्वर्णोदय + इन

ध्यानप्रशान्त-मानससरोवर-चारुबिम्बित-नादहिमकुलशैल-
-प्रत्यक्षदर्शन-ज्ञानोज्ज्वल-हीरभास्कर ! ४६२

नादहिमालय-भूरिभासक-ज्ञानभानो ! ४६३

भक्तानुराग-मानससरोवर-प्रतिबिम्बित-कृतिकुलहिमाचल-विस्फुलिङ्गक-
-सहस्रार्चि-ज्ञानसङ्गीत-सौवर्ण-खद्योतनक ! ४६४

ज्ञानहिमकुलाचलाभिमुख-ध्यानमानससरोवर-
-परमात्मानन्दप्रशान्ते ! ४६५

नादनगराज-हिमालयानन्तात्मानन्द-नीलमानससरोवर ! ४६६

अनन्तात्मानन्द-नील-मानससरोवराभिमुख-नादहिम-नगराज ! ४६७

निस्तरङ्ग-ज्ञानमानससरोवर-प्रतिबिम्बित-नादहिमालय-व्याप्त-मिष्टमौन ! ४६८

अनुरागमानससरोवर-स्वच्छ-निर्मल-सलिल-प्रतिबिम्बित-गुरुहिमालय ! ४६९

भक्तितौषाराचल-प्रवह-दिव्यनाम-गानगङ्गे ! ४७०

दिव्यानुभूतिहिमालय-नादकनकदीप्ते ! ४७१

उपप्लाव्य-मौनहिमालय-ज्ञानप्रशान्त-मानससरोवर ! ४७२

ज्ञानमानससरोवर-स्वच्छ-सङ्गीतसलिल ! ४७३

मानससरोवर-ज्ञानाच्छसलिल-प्रतिबिम्बित-तूष्णींस्थान-तौषारालय ! ४७४

मानससरोवर-काचतल-बिम्बितद्युति-कनकमय-हिमगिरिशिखर ! ४७५

नादोदगाद्रि-प्रज्ञानप्राग्र ! ४७६

नादोदगाद्रि-प्रज्ञानप्राग्र-प्लवनोंकारश्वेत ! ४७७

नादोदगाद्रि-प्रज्ञानप्राग्र-प्लवनोंकारश्वेत-प्रतिफलन-प्रशान्तिसरोवर ! ४७८

प्रशान्तिसरोवर-प्रतिफलित-नादोंकारघन-सज्ज्ञानहिमालय ! ४७९

ज्ञानहिमालय-प्रशान्तिसरोवर-प्रतिफलित-नादोंकाररूप ! ४८०

रागहिमालय-नादोंकाररूप-प्रतिफलन-रागसरोवर ! ४८१

प्रशान्तिहिमालय-ज्ञानवियत्प्रहर्षण-नादोंकाराभ्र ! ४८२

परमानन्द-घननील-व्योमदघ्न-नादहैमहिम-हंसकूट ! ४८३

प्रशान्तमानससरोवर-मन्दहास-लसद्राग-राग-राग-रङ्ग-तरङ्ग-
-शुद्धसत्त्वश्वेत-ज्ञानानन्द-परमहंस ! ४८४

नादकैलासनाथ-लास्य-गीतमृदुवात ! ४८५

गीतमृदुवात-मोदित-नादकैलासनाथ ! ४८६

मानससरोवरप्रान्त-निध्यात-नादकैलासनाथ ! ४८७

वैराग्य-प्रालेयमय-मानसगुहा-विकाशित-ज्ञानश्वेतामरनाथ ! ४८८

नादहिमालय-सङ्गीतसाहित्यसरस्वती-सौभाग्यलक्ष्मी-समेत-
-ज्ञानमोक्ष-श्रीमन्नारायण-प्रत्यक्ष-मुक्तिधाम-सौभग-
-दिव्यनामसत्कीर्तन ! ४८९

दृष्टादृष्ट-दिव्यधाम-पुण्य-समष्टिरूप ! ४९०

नादशुभ्रशेखराखण्डदर्शनात्मानुभूति-प्रथमकल्प-मनस्सङ्कल्प-
-परिपूरण-सद्गुरुदेव ! ४९१

कविस्फूर्त्यजस्रधाराझर-प्रपात-प्रभात-प्रशान्तिच्छवि-प्रालेयालय ! ४९२

सुषम-तौषारालय-प्रशम-प्राणस्फुरित-कविच्छवि-प्रकर्ष ! ४९३

परमात्म-प्रत्यक्षस्वरूप-हिमगङ्गा-प्रकृति-दिव्यशोचिस्स्फुरित-
-भावार्द्र-कविमानस-प्रहर्ष ! ४९४

सांसारिक-घनजालोपर्युड्डीन-मानस-दिव्यानुभव-हिमोत्कर्ष-परमहर्ष ! ४९५

कोमल-कविमानस-प्रहर्षण-व्यक्त-परमात्मदर्शन-दिव्यप्रकृतिसौन्दर्य ! ४९६

हिमगङ्गा-प्रकृतिसौन्दर्य-परिपूर्णव्यापक-परमेश्वरदर्श-नमनःपरिपक्व ! ४९७

सांसारिकतृण-लवणमुत्य-तुषारबिन्दुजात-सरल-कविहृदयानन्द-
-दिव्यदर्शन ! ४९८

प्रकृतिरूप-परब्रह्म-संदर्शन-मृदुहृदयवास-मधुरनादब्रह्मन् ! ४९९

शिक्षित-निःस्पृह-विनय-प्रकृतिरूप-सद्गुरो ! ५००

लोकाभूत-पूर्णत्वान्वेषणेकोत्तर-पुण्यगङ्गा-पावित्र्य-सत्कृते ! ५०१

दुर्गम-पर्वत-घर्घर-नदी-समुद्रातिसौन्दर्यातिग-सुप्रसाद-सूक्ष्म-
-कविमानस-सौष्ठव ! ५०२

दारुण-भयानक-हिमालय-सागराद्यतिसौन्दर्यातिशायन-
-ब्रह्मसाक्षात्कार-प्रापण-सङ्गीत-ब्रह्मानन्द-सुधाम्बुधि-
-गभीरमर्म-बोधि-गुरुदैवत ! ५०३

हिम-गङ्गा-रभससहित-कृच्छ्ररहित-नित्यानन्द-सङ्गीतातिदैवत ! ५०४

त्यागगङ्गास्नात-भक्ताग्र-विश्वरूप-नादराजशेखर ! ५०५

एकान्तभक्तान्तरनुराग-मानसगङ्गामूल-रागहिमालय ! ५०६

एकान्तचित्त-लय-मनोहिमालय-नामगङ्गातीर-निध्यातनादगुरो ! ५०७

मौनहिमालय-मनोगङ्गातीर-निध्यात-निराकारोंकाराकार ! ५०८

एकाकिशिष्यासक्ति-हिमाचलोद्भूत-स्वाभाविकपवित्र-
-मानसगङ्गाभिषिक्त-गुरुवर ! ५०९

श्रीरामसंमज्जन-कृतिगङ्गा-संमग्नैकशिष्यान्तरङ्गानुराग-स्तुतिगङ्गासंमग्न ! ५१०

